॥ श्रीकृष्णजयन्ती निर्णयः ॥

श्री गुरुभ्यो नमः हरिः ॐ
श्रीमदानन्दतीर्थ भगवत्पादाचार्य विरचितः
श्रीकृष्णजयन्ती निर्णयः

रोहिण्या मध्यरात्रे तु यदा कृष्णाष्टमी भवेत् ।
जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशनी(नं) ॥ १॥

यस्यां जातो हरिः साक्षान्नि शेते भगवानजः ।
तस्मात्तद्दिनमत्यर्थं पुण्यं पापहरं शुभपरम् ॥ २॥

तस्मात्सर्वैरुपोश्या सा जयन्ती नाम सा(वै) सदा ।
द्विजातिभिर्विशेषेण तद्भक्तैश्च विशेषतः ॥ ३॥

यो भुङ्क्ते तद्दिने मोहा(लोभा)त् पूयशोणितमत्ति सः ।
तस्मादुपवासेन्नित्य(पुण्य)ं तद्दिने(नं) श्रद्धयान्वितः ॥ ४॥

कृत्वा शौचं यथा न्यायं स्नानं कुर्यादतंद्रितः ।
प्रभात काले कुर्वीत यूगायेत्यादिमन्त्रतः ॥ ५॥

नित्याह्निकं प्रकुर्वीत भगवन्तमनुस्मरन् ।
मध्याह्न काले च पुमान् सायङ्काले त्वतन्द्रितः ॥ ६॥

स्नायेत पूर्वमन्त्रेण वासुदेवमनुस्मरन् ।
ततः पूजां प्रकुर्वेत विधिवत्सुसमाहितः ॥ ७॥

यनायेति च मन्त्रेण श्रद्धाभक्तियुतः पुमान् ।
कृष्णं च बलभद्रं च वसुदेवं च देवकीम् ॥ ८॥

नन्दगोपं यशोदाञ्च सुभद्रां तत्र पूजयेत् ।
(अर्घ्यं दत्वा समभ्यच्याभ्र्युधिते शशिमण्डले) ।
जातः कंसवधार्ताय भूभारोत्थारणाय च ॥ ९॥

कौरवानां विनाशाय दैत्यानां निधनाय च ।
पाण्डवानां हितार्थाय धर्मसंस्थापनाय च ॥ १०।

गृहाणर्घ्यं मया दत्तं देवक्या सहितो हरिः ।

अर्घ्यं दत्वासमभ्यर्च्याभ्युदिते शशिमण्डले ॥ ११॥

क्षीरोदार्णवसम्भूत अत्रिनेत्र समुद्भवः ।
गृहाणर्घ्यं मया दत्तं रोहिण्या सहितः शशिम् ॥ १२॥

दत्वार्घ्यं मनुनानेन उपस्थाय विधुं बुधः ।
शशिने चन्द्रदेवाय सोमदेवाय छेन्दवे ॥ १३॥

मृगिणे शी(सि)त बिम्बाय लोकदीपाय दीपिणे ।
(रोहिणीसक्तचित्ताय कन्यादानप्रदायिने)
शीतदीदितिबिम्बाय तारकापतये नमः ॥ १४॥

उपसम्हृत्य तत्सर्वं ब्रह्मचारी जितेन्द्रियः ।
विश्वायेति च मन्त्रेण ततः स्वापं समाचरेत् ॥ १५॥

ततो नित्यान्हि कं कृत्वा शक्तितो दीयतां धनम् ।
सर्वायेति च मन्त्रेण ततः पारणमाचरेत् ।
धर्मायेति ततः स्वस्थो मुच्यते सर्वकिल्बिषैः ॥ १६॥

॥ इति श्रीमदानन्दतीर्थ भगवत्पादाचार्य विरचितम् ॥

॥ जयन्ती निर्णयः सम्पूर्णम् ॥

भारतीरमणमुख्यप्राणान्तर्गत श्रीकृष्णार्पणमस्तु